# ॥ लीलाविलासप्रहसनम् ॥

## AN ORIGINAL FARCE IN 7 ACTS

BY

**Pandit K. L. V. SASTRI,**

Mahopadhyaya, Siromani, Sahityanipuna etc.

—:o:—

PUBLISHED BY

R. SUBRAHMANYA VADHYAR,

BOOK-SELLER & PUBLISHER

KALPATHI—PALGHAT

1935

Price] [As 4.

# SOME UNPARALLALED SANSKRIT TEXT-BOOKS.

Note:—These books are approved by various Text-Book Committees and are very largely in use throughout the **Country** including the Native States.

## A REFORMED SERIES OF ILLUSTRATED SANSKRIT READERS:—

| | | | | | |
|---|---|---|---|---|---|
| Infant Reader | संस्कृतबालादर्शः सचित्रः | | 0 | 4 | 0 |
| Reader I | संस्कृतप्रथमादर्शः | Do. | 0 | 6 | 0 |
| Reader II | संस्कृतद्वितीयादर्शः | Do. | 0 | 8 | 0 |
| Reader III | संस्कृततृतीयादर्शः | Do. | 0 | 10 | 0 |

| | | | |
|---|---|---|---|
| पञ्चतन्त्रसंग्रहः A thorough reconstructed Abribgement of the original | 1 | 0 | 0 |
| चन्द्रापीडचरितम्—संक्षेपेण कादम्बरीकथाप्रतिपादकम् | 0 | 6 | 0 |
| शब्दमञ्जरी—(तिङन्त-अव्यय-समासप्रकरण-शब्दार्थकोशसहिता) The best edition of its kind | 0 | 5 | 0 |
| Do. Antique paper edition | 0 | 6 | 0 |
| धातुमञ्जरी—धातुकोशसहिता with foot-notes & Index of roots in Eng. & with Sanskrit meanings | 0 | 8 | 0 |
| वाक्यतत्त्वम्—An explanatory treatise in Sanskrit syntax and composition | 0 | 6 | 0 |
| श्रीरामोदन्तम्—with foot-notes and English Translation | 0 | 5 | 0 |
| श्रीकृष्णविलासकाव्यम—A very popular Text for beginners in Kavya Study. | 0 | 10 | 0 |

Sanskrit Copy Books गैर्वाणीप्रतिलेखावलिः—

| | | | |
|---|---|---|---|
| No. 1 Bold Hand......स्थूललिपिः | 0 | 2 | 0 |
| No. 2 Medium Hand... मध्यमलिपिः | 0 | 2 | 0 |
| No. 3 Small Hand......सूक्ष्मलिपिः | 0 | 2 | 0 |

॥ लीलाविलासप्रहसनम् ॥



# AN ORIGINAL FARCE IN 7 ACTS



BY

**Pandit K. L. V. SASTRI,**

Mahopadhyaya, Siromani, Sahityanipuna etc.

PUBLISHED BY

R. SUBRAHMANYA VADHYAR,

BOOK—SELLER & PUBLISHER

KALPATHI—PALGHAT



1935

## ॥ कथावस्तु ॥

प्रथमेऽङ्के—गौतमः स्वसुतां लीलां वेदान्तभट्टनाम्ने मूर्खपण्डिताय दित्सति ; चन्द्रिका तु सोमिलनाम्ने मद्यपाय। इदमधिकृत्य तौ कलहायेते। लीला तौ सान्त्वयति। द्वौ मद्यपायिनौ प्रविशतः। गौतमादयो भयेन अपसरन्ति।

द्वितीये—वेदान्तभट्टादयो विवाहनिश्चयार्थमागच्छन्ति। गौतमस्तानुपचरति। चन्द्रिका प्रातिकूल्यमाचरति। अन्ततो वेदभट्टादयः सहर्षाः प्रतिनिवर्तन्ते।

तृतीये—वेदान्तसोमिलौ अनभिलषन्ती लीला भ्रातरं सत्यव्रतमुपेत्य तस्मै पित्रोः आग्रहं निवेदयति। स च स्वसहाध्यायिमित्रं विलासकुमारं लीलायाः योग्यं वरं निश्चित्य स्वव्यवसितं पितृभ्यां ज्ञायमानं विहन्येतेति मत्वा सर्वं गूढमेव साधयितुमिच्छन् विलासकुमारस्यान्तिकं प्रतिष्ठते।

चतुर्थे—विवाहगृहं गच्छन्तः चत्वारो विप्राः।

पञ्चमे—गौतमेन ताडिता पीडिता च चन्द्रिका स्वज्ञातिगृहं गच्छति। गौतमोऽपि कर्तव्यशेषकरणाय गृहान्निर्गतः। अर्धरात्रे द्वौ चोरौ प्रविश्य लीलां पथि सम्मुखागतं पुण्डरीकं चादाय गच्छतः।

षष्ठे—गौतमः ससम्भ्रमं विवाहोपकरणानि सज्जीकरोति। वेदभट्टादयः प्रविशन्ति। चन्द्रिका पुण्डरीकमनागतं दृष्ट्वा कुपिता पितृगृहात् प्रतिनिवर्तते। तस्याः सम्बन्धिनोऽप्यागच्छन्ति। लीलाया अदर्शनेन चन्द्रिका गौतमाय कुप्यति। वृद्धा प्रविश्य चोरवृत्तान्तं निवेदयति। तेन सर्वे सम्भ्रान्ता हा हेत्याक्रोशन्ति। अत्रान्तरे सत्यव्रतः प्रविश्य विलासकुमारेण लीलाया रक्षणं तयोरागमनं च कथयति। पश्चात् लीलाविलासादयः प्रविशन्ति। ततः चन्द्रिकागौतमाभ्यां लीला सहर्षं विलासकुमाराय दीयते।

सप्तमे—परेद्युः शुभे मुहूर्ते विवाहो निर्वर्त्यते। वृद्धा वधूवरौ आशास्ते। भरतवाक्यम्।

## ॥ पात्राणि ॥

गौतमः—धर्मग्रहग्रस्तो विप्रः
चन्द्रिका—गौतमस्य भार्या
लीला—तयोः सुता
प्रथमः
द्वितीयः } —द्वौ मद्यपायिनौ
पुरोहितः—वेदभट्टस्य कुलगुरुः
वेदभट्टः—वेदान्तभट्टस्य पिता
वेदान्तभट्टः—गौतमेन निश्चितो वरः
वृद्धा—गौतमस्य माता
सत्यव्रतः—लीलाया भ्राता
वृद्धः
प्रथमः
द्वितीयः
पुरञ्जनः } —विवाहगृहं गच्छन्तो विप्राः
चोरः
सन्धिभेदकः } —चोरौ
पुण्डरीकः—चन्द्रिकाया भ्राता
कुशिकः—रामिलस्य कुलगुरुः
रामिलः—सोमिलस्य पिता
सोमिलः—चन्द्रिकया निश्चितो वरः
विलासः—(विलासकुमारः धर्मराजापरनामधेयः) यस्मै लीला दत्ता ।

---

॥ श्रीः ॥

# ॥ लीलाविलासप्रहसनम् ॥

## ॥ प्रथमोऽङ्कः ॥

(ततः प्रविशति विकृतोज्ज्वलवेषः सूत्रधारः)

सूत्र—अहं लम्बोदरः साक्षादहं दामोदरः परः ।
अहं मृत्युञ्जयः स्थाणुरहं वृद्धः पितामहः ॥
अहमेव परं दैवमहं परमपूरुषः ।
मत्तः परतरो नास्ति

नटी—(प्रविश्य सक्रोधम्) रे ! अहम् ?

सूत्र—(सप्रश्रयम्) त्वमेका मम देवता ॥

नटी—(सहासम्) साधूक्तम् ! प्रीतास्मि ते । वरं वृणीष्व ।

सूत्र—प्रिये ! (इत्यर्धोक्ते)

नटी—(सरोषम्) 'देवते !' इति ब्रूहि ।

सूत्र—देवते ! अद्य किञ्चित् प्रहसनमभिनेतव्यमित्याज्ञप्तोऽस्मि परिषदा । न च किञ्चिदभ्यर्हितं दृश्यते प्रहसनम् । किं क्रियतामिदानीम् ?

नटी—अलं चिन्तया । सति देवताप्रसादे न किञ्चित् परिहास्यते । आवां केशाकेशि कलहं कुर्वः । आवयोः कलह एव हृद्यं प्रहसनं भविष्यति ।

(नेपथ्ये)

अयि ! मुग्धे ! किमेवं प्रलपसि ?

नटी—(कर्णं दत्त्वा) रे ! किमेतत् ?

सूत्र—(नेपथ्याभिमुखमवलोक्य) आर्ये ! दिष्ट्या लघूकृत आवयोर्भारः । कुतः—

गौतमो नाम विप्रोऽयं तस्य भार्या च चन्द्रिका ।
अत्रैवागच्छतः क्षिप्रं कोपविस्फारितेक्षणौ ॥

अनयोः स्वाभाविकः कलह एवाद्य प्रहसनं भविष्यति । अतः कृतमावयोः कृतककलहेन । तन्निष्क्रामावः ।

(निष्क्रान्तौ)

॥ इति प्रस्तावना ॥

---

(ततः प्रविशतो गौतमश्चन्द्रिका च कलहायमानौ)

गौतमः—अयि ! मुग्धे ! किमेवं प्रलपसि ? कन्यादानं महादानं कथयन्ति धर्मज्ञाः । तच्च पात्रे क्रियमाणं महते फलाय कल्पेत ।

चन्द्रिका—कथं नु खलु वेदभट्टस्य पुत्रः पात्रं कन्यादानस्य ?

गौतमः—स खलु कौशिकगोत्रः कुलीनो वेदाभिज्ञः सदाचारशीलश्च ।

चन्द्रिका—धिग्गोत्रं धिक्कुलं तस्य धिग्वेदान् धिगभिज्ञताम् ।
धिक्सदाचारशीलत्वं धिग्धिग्धिक्सर्वमेवाधिक् ॥

स खलु निष्किञ्चनः पञ्चपात्रमात्रोपजीवनः परपिण्डेन कुक्षिं भरति ।

गौतमः—अत एव मे निर्बन्धः तस्मै कन्यादानं कर्तव्यमिति । 'दरिद्रे दीयते दानं सफलं पाण्डुनन्दन' इति हि कथयन्ति धर्मशास्त्रकाराः ।

चन्द्रिका—मर्कटहस्तगतं माल्यमिव मूर्खहस्तगतं धर्मशास्त्रम् एवमनर्थाय भवति ।

गौतमः—अहो ! एवं नाम धर्मज्ञान् पाखण्डाः परिहसन्ति ।

चन्द्रिका—अस्तु ; एतादृशं महाधर्मज्ञं त्वाम् इदं पृच्छामि—अपि त्वया तव वृद्धः पिता क्वापि तीर्थे निक्षिप्तः ?

गौतमः—कस्य हेतोः ?

चन्द्रिका—अस्ति धर्मशास्त्रमिति ।

गौतमः—किं तद्धर्मशास्त्रम् ?

चन्द्रिका—'वृद्धं तीर्थेषु निक्षिपेत्' इति खल्वाह मनुः ।

गौतमः—पितरि जीवति नैतद्धर्मशास्त्रं मया श्रुतम् । अन्यथा तद्वचनम् अकरिष्यम् ।

चन्द्रिका—नाद्यापि किञ्चित् छिन्नम् । आवयोः पुत्रं सत्यव्रतं वचनमेतदध्यापय येन स त्वां वृद्धं क्वापि तीर्थे निमज्जयिष्यति ।

गौतमः—रे ! मा तावदेतत् तस्य कर्णगतं कुरु । चिरं जीवामि ।

चन्द्रिका—स्वयं चिरं जीवितुमीहमानः किं नु खलु सुतां निरपराधे वयसि वर्तमानां दारिद्र्यान्धकूपे पातयितुमिच्छसि ?

गौतमः—अहो ! मूढासि त्वम् । बहुगुणं हि दारिद्र्यं नाम । पश्य—

दारिद्र्ययोगाद्व्रजति श्रियं नरः ।

चन्द्रिका—किं किम् ? पुनरपि पठ ।

गौतमः—दारिद्र्ययोगाद्व्रजति श्रियं नरः ।

चन्द्रिका—दारिद्र्ययोगात् त्यजति ह्रियं नरः।

गौतमः—दारिद्र्ययोगादुपयाति संयमम्।

चन्द्रिका—दारिद्र्ययोगादुपयाति तं यमः।

गौतमः—दारिद्र्ययोगाल्लभते परं पदम्।

चन्द्रिका—दारिद्र्ययोगात् परपादसेवनम्।

गौतमः—दारिद्र्ययोगाद्भवबन्धमोचनम्।

चन्द्रिका—दारिद्र्ययोगात् परगेहभोजनम्।

गौतमः—जानामि ते वाचालताम्। अस्तु! पुनः कस्मै प्रदेया लीला?

चन्द्रिका—विश्रुतो हि शम्बरग्रामवासी रामिलः।

गौतमः—अस्ति, श्रूयते, तस्य पुत्रेण प्रथां गतः!

चन्द्रिका—कथमिव?

गौतमः—तस्य किल पुत्रः सोमिलो मद्यपायी दुराचारश्च। तेन तत्पिता प्रथितोऽभवत्। अस्तु, ततः किम्?

चन्द्रिका—स खलु यद्येव मद्यपायी तथापि महाधनः। धनमेव हि लोके गरीयो माननीयं च। श्रूयताम्—

दुन्दुभिस्तु सुतरामचेतनस्तन्मुखादपि धनं धनं धनम्।
कांस्यपात्रमपि यन्नपुंसकं तच्च रौति हि पणं पणं पणम्॥

गौतमः—शान्तं पापम्! शान्तं पापम्! तस्मै मत्तबालकाय देया लीला? नाहं धर्मज्ञः तस्मै कन्यां दास्यामि।

चन्द्रिका—सत्यम्! त्वं न दास्यसि, अहं तु दास्यामि।

गौतमः—स खलु लुञ्चितकेशः धूमपायी स्वयं मुण्डनं कुर्वन् असकृन्मया दृष्टः।

चन्द्रिका—तत्सर्वं कालोचितमेव।

गौतमः—अलं प्रलापेन । अतिभूमिं गतासि । अद्य विवाहनिश्चयार्थमागमिष्यन्ति वेदभट्टप्रभृतयः सम्बन्धिनः ।

चन्द्रिका—यथागतं गमिष्यन्ति च । तेन किम् ?

गौतमः—मया खलु प्रतिज्ञा दत्ता वेदान्तभट्टाय ।

चन्द्रिका—प्रतिज्ञा खलु दत्ता, न तु कन्यका । कः प्रयासः प्रतिज्ञाया भञ्जने ?

गौतमः—(सक्रोधम्) रण्डे ! किमित्येवं शुनीव भषसि ? किं न तूष्णीं भवसि ?

(इति तां केशेष्वाकर्षति । सा उच्चैः क्रन्दति)

(लीला ससम्भ्रमं प्रविशति)

लीला—तात ! किमेतत् ? कुतोऽयं व्याकोपः ?

गौतमः—वत्से ! त्वां किल तव माता रामिलस्य सुताय मद्यपाय दास्यति ।

लीला—किं मद्यपाय ? मद्यपो दूरतस्त्यज्यः ।

गौतमः—(चन्द्रिकां तर्जयन्) फलितो मे मनोरथः ।

चन्द्रिका—भद्रे ! त्वां किल तव पिता वेदभट्टसुताय वेदान्तभट्टाय दास्यति ।

लीला—किं वेदान्ताय ? वेदान्तो हि संयमकामैः आदरणीयः, न तु उपयमकामैः । अतस्त्याज्या वेदान्तकथापि ।

चन्द्रिका—(गौतमं तर्जयन्ती) फलितो मे मनोरथः ।

(उभौ मिथस्तर्जन्या तर्जयतः)

लीला—अम्ब ! तात ! किमेवं कलह एव विवाहस्य फलम् ? युवयोः कलहेन असार इव भाति मे संसारः । अतस्त्यज्यतां कलहः । वर्धतां युवयोः सौहार्दम् । अभ्यन्तरमेव गच्छामः ।

गौतमः—वत्से ! त्यज्यते मया कलहः ।

चन्द्रिका—त्यज्यते मया सौहार्दम् ।

लीला—तात ! त्वया तर्हि सौहार्दमाद्रियताम् ।

चन्द्रिका—मया तर्हि कलह आद्रियते ।

लीला—क एष युवयोः अस्थानेऽभिनिवेशः ? किं वेदान्तमद्यपौ अपहाय नान्ये वराः सन्ति ?

गौतमः—सन्त्येव वराः श्वान इवासङ्ख्याः । किं तैः ? विरला एव क्षितौ वेदान्तभट्टतुल्या धर्मज्ञाः ।

चन्द्रिका—वत्से ! सहस्रश उपलभ्यन्ते वेषधारिणो वेदान्तभट्टाः । तैः किम् ?

(ततः प्रविशतो द्वौ मद्यपायिनौ मदविकारमभिनयन्तौ घुर्घुरायमाणौ)

लीला—(सभयम्) कावेतौ ?

गौतमः—एतौ पथि गच्छन्तौ द्वौ मद्यपायिनौ । मन्ये, तव मात्रा सङ्कल्पितेन वरेण विवाहनिश्चयार्थं प्रेषितौ भवितुर्महतः ।

(चन्द्रिका भयं नाटयन्ती अपसरति)

लीला—(मातरं हस्तेनाकृष्य) अम्ब ! एहि । मा भैषीः । किमीदृश एव त्वया निश्चितो वरः ?

(मद्यपायिनौ तावभिधावतः)

गौतमः—सर्वेऽभ्यन्तरं गच्छामः ।

(निष्क्रान्ताः सर्वे)

———

## ॥ द्वितीयोऽङ्कः ॥

(ततः प्रविशति वेदभट्टो वेदान्तेन सह पुरोहितं पुरस्कृत्य)

वेदभट्टः—आचार्य ! महाज्यौतिषिकोऽसि । ब्रूहि—अयं विवाहो भविष्यति न वा ?

पुरोहितः—(अङ्गुलीगणनया विचिन्त्य) चारवशाद्ब्रवीमि—शनिः क्रूरदृष्टिः वक्रगतिश्च दृश्यते । अथ तु बुधः स्वस्थान एव वर्तते । अतो मन्ये भविष्यति ।

वेद—किमस्ति ते संशयः ?

वेदान्तभट्टः—संशयात्मा विनश्यति ।

पुरो—नास्ति मे संशयः । भविष्यत्येव ।

वेद—साधूक्तं त्वया । भविष्यत्येव विवाहः ।

पुरो—कस्मादयं ते निश्चयः ?

वेद—स खलु गौतमो न कथञ्चित् प्रतिज्ञाभङ्गं करिष्यति ।

पुरो—मम दैवज्ञस्य वचनं न कदाचिन्यथा भविष्यति (परिक्रम्य अवलोक्य च) इदं गौतमस्य गृहम् । प्रविशामः ।

(सर्वे प्रविशन्ति)

वेदान्त—अहो ! श्वश्रूगृहं प्रविशत एव मे प्रसीदति हृदयम् ।

(ततः प्रविशति गौतमः)

गौ—(सादरं प्राञ्जलिर्भूत्वा) नमोऽभ्यागतेभ्यः ।

**चन्द्रिका**—(ससम्भ्रमं प्रविश्य) किमेते लम्बकूर्चा महर्षिवंशीयाः ?

(पुरोहितः स्वश्मश्रूणि स्पृशन् वेदभट्टमवलोकयति । वेदभट्टः शिरश्चालयति)

**वेदान्त**—अहो ! महर्षिवंशीयानस्मान् मन्यते श्वश्रूः ! महतीयमस्माकं सम्भावना !

**गौ**—उपविशन्तु भवन्तः ।

(इति कम्बलमास्तृणाति । ते उपवेष्टुमिच्छन्ति)

**चन्द्रिका**—उत्तिष्ठत उत्तिष्ठत । (इति कम्बलमादाय नयन्ती) उपविशत । (पुरोहितो विषण्णो वेदभट्टस्य मुखमवलोकयति)

**वेदान्त**—अहो ! धर्मज्ञा मे श्वश्रूः !

'तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता' ।

इति हि धर्मवचनम् ।

**वेद**—सत्यम्, भूमिरेव धर्म्यमासनम् । उपविशामः (सर्वे उपविशन्ति)

**चन्द्रिका**—तृणानि, भूमिः, उदकम्, वाक् चतुर्थी च सूनृता । किं तृणमपेक्ष्यते भक्षणाय ?

**पुरो**—न किञ्चिदपेक्ष्यते ।

**गौ**—'इदं पानीयम्' (इति जलमपर्यति)

**चन्द्रिका**—किमिति पानीयं ददासि ? (इति जलपात्रं गृहीत्वा नयति)

**पुरो**—किमेतत् ? विपरीतमिव पश्यामि !

**वेद**—आचार्य ! उचितमेवैतत् । प्रथमागतेभ्यः सम्बन्धिभ्यः पयः पानाय देयम् ; न तु पानीयम् ।

**चन्द्रिका**—किं पयोऽपेक्ष्यते ? आनयामि (इति लवणमरीचादिभूयिष्ठं कटुकं तक्रमानीय ददाति । वेदान्तश्चापल्येन द्रुतं पिबति । इतरावपि पिबतः । सर्वे कटुत्वादिपीडां नाटयन्ति)

पुरो—किमिदं तक्रमानीतम् ?

वेदान्त—पयो दुर्लभमस्माकं तक्रं शक्रस्य दुर्लभम् ।

चन्द्रिका—पयःपानं भुजङ्गानाम् ; न तु सम्बन्धिनाम् ।

पुरो—भद्रमुखि ! सम्बन्धिनोऽपि कुटिलगतित्वात् भुजङ्गा एव ।

चन्द्रिका—अहो ! यूयं कुटिलगतयो भुजङ्गाः ! शीघ्रमपसरत । अन्यथा मन्त्रप्रयोगेणोच्चाटनं भविष्यति ।

पुरो—(आपवार्य) आर्य ! किमेतत् ?

वेदान्त—(अपवार्य) इयमेव क्रूरदृष्टिः कुसृतिः शनिः ।

वेद—किमेतया भणन्त्या ? गौतमं पृच्छामः । (प्रकाशम्) आर्य ! किमेतत् ?

गौ—एतदास्ताम् । भवन्तः किं ब्रुवन्ति ?

पुरो—अस्ति जन्मपत्रिकयोः प्रशस्ता घटना ।

चन्द्रिका—यद्येवं जन्मपत्रिकयोरन्योन्यं निर्वर्त्यतां सम्बन्धः । लीलाया वेदान्तस्य च नास्त्येव मिथो घटना ।

वेदान्त—अहह ! परमार्थोऽयं वेदान्तसम्मतः ।

पुरो—बटो ! तूष्णीं भव । त्वं सर्वमाकुलीकरोषि ।

वेद—जात ! तूष्णीं भव । किं गर्दभ्याः पुरतो वीणावादनेन ?

वेदान्त—विभूषणं मौनमपण्डितानाम् ।

(इति करेणास्यं पिधाय निश्चल उपविशति)

पुरो—भवति ! वधूरानीयताम् । पश्यतु सा वरम् ।

चन्द्रिका—अहो ! भुजङ्गेभ्यो बिभेति मे सुता ।

वेद—भवति ! गौतमेन किञ्चित् कार्यमालोचयितुमागतोऽस्मि । किं ते वृथाप्रसङ्गेन ?

वेदान्त—मध्याह्ने स्त्रीप्रसङ्गेन कालो गच्छति धीमताम् ।

चन्द्रिका—एवं तर्हि नाहं वः प्रतिकूला भवामि। येन सह कार्यमालोचनीयं तेन सह सम्यगालोच्य यथेष्टं जलं पीत्वा गम्यताम्।

(इति जलपात्रं पुरोहितस्याग्रे निधाय द्रुतपदं गच्छति)

वेदान्त—अहो! धर्मरूपिणी मे श्वश्रूः! यतो हि—धर्मस्य त्वरिता गतिः।

वेद—आर्य! किमिदम्?

गौ—किमिति भवन्तः क्षणश्रुतात् तस्या वचनात् त्रस्यन्ति? प्रत्यहं प्रतिक्षणम् एतादृशैस्तस्या वचनैः जर्जरीकृतकर्णपुटोऽप्यहं निर्लिप्त एवास्मि। पश्यत मे कपोलम्। (इति कपोलं परामृशति)

वेदान्त—अहो! नित्यशुद्धबुद्धमुक्तस्वभावो मे श्वशुरः!

पुरो—किमद्य विवाहो निश्चेतव्यः?

वेद—वध्वा मनोरथः कीदृशः?

गौ—किन्नु खलु अजा तत्सम्मत्या भैरवायार्प्यते?

चन्द्रिका—(अर्धं प्रविश्य) सत्यं भैरव एवायम्।

वेद—भवति! मङ्गलारम्भे नोचितः कोपः। आगम्यतामिह।

चन्द्रिका—यद्यहमागच्छामि तर्हि सर्वमधरोत्तरं भविष्यति! अतो गच्छामि।

वेदान्त—न लज्जा न विनीतत्वं न दाक्षिण्यं न भीरुता।

पुरो—अनुनीयतां तावत् ब्राह्मणी। पश्चात् विवाहं निश्चेष्यामः।

गौ—कः खलु स्त्रियं पृष्ट्वा कर्माणि करोति। सा तथा भणतु नाम।

वेद—साधु! भाव! साधु! अहमपि मम ब्राह्मण्या वचो न कर्णे करोमि। मम सदृशः सम्बन्धी भवान्।

पुरो—कदा विवाहस्य मुहूर्तो भवतु?

वेदान्त—शुभस्य शीघ्रम्।

गौ—शास्त्रीयेषु विषयेषु भवन्तः प्रमाणम् ।

पुरो—यद्येवम्—आगामिनि भौमवासरे नास्ति मे कुत्राप्यन्यत्र पौरोहित्यम् । तस्मिन् दिने भवतु ।

वेद—भौमवासरो हि भृशमप्रशस्तः ।

पुरो—न न न । मङ्गलकर्मणां भौमवासरः प्रशस्त एव । अत एव स मङ्गलवासर इत्युच्यते ।

गौ—उपपद्यते । साधीयसी व्याख्या । तथा भवतु ।

वेदान्त—व्याख्या बुद्धिबलापेक्षा सा कर्तव्या सुखान्मुखी ।

पुरो—आनीयतां वधूः ।

गौ—तथा (इत्युक्त्वा अभ्यन्तरात् वधूमानयति । माता च तामनुगच्छति)

(वेदान्तभट्ट उत्थयास्यनिहितहस्त आश्चर्यं नाटयति)

पुरो—(वधूमवलोक्य) भद्रे ! अश्मेव त्वं स्थिरा भव ।

चन्द्रिका—अश्मवत् सा स्थिरैवास्ते । न युष्माकं वेदान्तभट्टं परिणेष्यति ।

पुरो—(वेदान्तस्य कर्णे आलोच्य) भवति ! अस्माकं वरस्य अन्यदेव नामधेयं कल्प्यते ।

चन्द्रिका—किं कुम्भोदर इति ।

पुरो—न ।

चन्द्रिका—पुनः किम् ? तदुच्यताम् ।

पुरो—अस्य नवीनं नामधेयं लक्ष्मीकान्त इति ।

चन्द्रिका—अहो ! लक्ष्मीकान्तः । एवं तर्हि स लक्ष्म्याः कान्तः न तु लीलायाः ।

पुरो—इयं हि ते दुहिता साक्षाल्लक्ष्मीरेव । (वधूमवलोक्य) भद्रे ! राघवस्य यथा सीता—

चन्द्रिका—तिष्ठ तिष्ठ। 'रावणस्य यथा सीता' इति पठ।

पुरो—(वधूमवलोक्य) भद्रे ! एष ते वरः। प्रणम भर्तारम्।

चन्द्रिका—वत्से ! पुरोहितादीन् सर्वान् प्रणम। शीघ्रमितस्ते प्रयान्तु। (लीला प्रथमं पुरोहितस्याग्रे हस्ताभ्यां भूमिं स्पृष्ट्वा कर्णौ स्पृशन्ती प्रणमति)

वेदान्त—दुर्जनं प्रथमं वन्दे, सज्जनं तु ततः परम्।

पुरो—(वेदान्तमवलोक्य) रे ! (इति तं विस्फारिताभ्यां लोचनाभ्यां पश्यति)

(लीला वेदभट्टस्य पुरस्तात् तथैव प्रणमति, अपसरति च)

वेदान्त—प्रिये ! तिष्ठ तिष्ठ। (इति द्वित्राणि पदानि पुरो गत्वा) अयं ते गुरुः श्वशुरः। तस्याग्रे साष्टाङ्गपातमेवं प्रणामः कर्तव्यः (इति तस्या अग्रे साष्टाङ्गं प्रणिपतति)

पुरो—रे ! किमिदं कृतं त्वया। न वरेण वधूः नमस्कर्तव्या।

चन्द्रिका—भो ! एष न वरः किं तु अवरः। अतोऽस्याः पुरस्तान्नमस्कारे न कश्चिद्दोषः

पुरो—भवति तथा न वाच्यम्।

चन्द्रिका—सत्यम्, अवाच्यमेव तद्गतं सर्वम्।

वेद—भवति ! सदयमनुमन्यतां विवाहः।

चन्द्रिका—अस्तु, कियद्वः पुत्रस्य धनम् ?

वेद—विद्याधनं सर्वधनात् प्रधानम्। तत्सर्वमस्यास्ति।

चन्द्रिका—का विद्या शिक्षिता अनेन ?

वेद—अनेन विष्णुसहस्रनामावलिः पठिता। पुरुषसूक्तेऽप्यनेन परीक्षा दत्ता। वेदान्तेऽपि स्वाभाविकी वासना वर्तते।

चन्द्रिका—सम्यक्। रमणीया विद्या अनेन परिशीलिता। अस्तु।

अप्येष सङ्गीतं जानाति ?

वेद्—(शिरश्चलयन्) अस्ति वासना ।

चन्द्रिका—तर्हि किञ्चित् गायतु ।

वेद्—वत्स ! श्वश्रूस्ते सङ्गीतं श्रोतुमिच्छति । भवाङ्कुरमित्यादिकीर्तनं पठ ।

वेदान्त—(स्वरशोधनपूर्वकम्)

भवाङ्कुरङ्गे यतमं कै वल्य फलदायकम् ।
न मामि माम कैशनपादपं केरु हम्परम् ॥

चन्द्रिका—(सहासम्) । इदं नाम दुर्वासनासङ्गीतम् ।

वेद्—भवति ! सङ्गीतेऽक्षराणां लोपो विनिमयश्च सुलभ एव । इदं पद्यमेवं पठनीयम्—

भवाङ्कुरं गेयतमं कैवल्यफलदायकम् ।
नमामि मामकैशानपादपङ्केरुहं परम् ॥

चन्द्रिका—व्याख्यां विनैव सर्वं ज्ञायते । (भर्तारमवलोक्य) अयं सम्यक् परीक्षितः । अस्माकं लीलायाः योग्यो वरः । निश्चेतव्य एव विवाहः । अन्यथा ते धर्मशास्त्रं रोदिष्यति । (इति सक्रोधं वधूमादाय गच्छति) ।

(सर्वे उत्थाय मुदं नाटयन्ति)

वेद्—अन्ततोऽनुमतिर्दत्ता ब्राह्मण्या ।

पुरो—यदुक्तं मया तदेव संवृत्तम् ।

गौ—यूयं तर्हि गच्छतेदानीम् । मङ्गलवासरे यथाकालं प्रत्यागच्छत ।

(सर्वे प्रस्थिताः)

वेदान्त—श्वशुरगृहं परमसुखम् ।

———

## ॥ तृतीयोऽङ्कः ॥

(ततः प्रविशति पठनव्यापृतः सत्यव्रतः)

(ततश्चिन्ताकुला लीला प्रविशति)

**सत्यव्रतः**—(लीलामवलोक्य) लीले ! किन्निमित्तं म्लानवदना दृश्यसे ?

**लीला**—किं ब्रवीमि मन्दभागिनी ! (इति पटान्तेन अश्रु प्रमार्जति)

**सत्य**—(उत्थाय) भद्रे ! कथ्यतां ते दुःखस्य कारणम् ।

**लीला**—मम पुराकृतं कर्मैव मे दुःखस्य कारणम ।

**सत्य**—कथमिव ?

**लीला**—पिता किल मां वेदान्तभट्टाय दित्सति ; माता च मद्यपाय सोमिलाय । अपि जानासि तौ ?

**सत्य**—उभावपि सम्यक् जानामि ; एको महिषः अपरो वानरः । लीले ! केन हेतुना पितृभ्यामेवं व्यवसितम् ?

**लीला**—मय्यतिस्नेहेन ।

**सत्य**—कदाचिदतिस्नेहो गुणदोषौ न पश्यति । अस्तु । मा भैषीः । अहं पितरौ सान्त्वयामि ।

**लीला**—भ्रातः ! अलं प्रयासेन । मया बहुतरं प्रार्थितौ न मे वचनं कर्णे कुरुतः । धर्मग्रहग्रस्तः पिता मया सान्त्व्यमानः वरगुणप्रतिपादकं श्लोकसहस्रं पठति, धर्मशास्त्रपुस्तकानि च उद्घाट्योद्घाट्य दर्शयति । माता च धनपिशाचिकाविष्टा वरेण दास्यमानानां भूषणसहस्राणां नामानि कथयन्ती मां प्रलोभयति, न च मे वचनस्य अवसरमप्यनुमन्यते । अपरं च तयोः नित्यकलहः

सम्प्रति निमित्तमिदमासाद्य रूढमूलः संवृत्तः । अतो मन्ये तयोरग्रे तव वचनमरण्यरुदितं स्यात् ।

सत्य—एवं तर्हि सर्वमेतदहं शुभोदर्कं करिष्यामि ।

लीला—कथमिव ?

सत्य—अस्ति खलु मे सहाध्यायी विलासकुमारः, यः खलु न केवलं महाधनः किन्तु सुरूपः सुभगो युवा च । सोऽस्माकं गृहमागच्छन् असकृत् त्वया दृष्टः । अस्मत्पित्रोरप्ययं बहुमतः । अयं ते योग्यो वरः ।

लीला—तस्य हि नामधेयं धर्मराज इति ?

सत्य—स पाठशालायां धर्मराज इत्यभिधीयते । तस्य माता तु तं विलास इत्येवाह्वयति ।

लीला—परं कोऽत्र मध्यस्थो भविष्यति ?

सत्य—अहमेव गत्वा तमभ्यर्थये । स मे प्रियमित्रम् ।

लीला—यदि न प्रतीच्छेत् तर्हि त्वं प्रत्याख्यानलघुः भविष्यसि ।

सत्य—स खलु तव शीलगुणैः विस्मितः त्वां सद्बालिकानां धुरि कीर्तनीयत्वेन असकृन्ममाग्रे प्रस्तौति । स कथं त्वां प्रत्याख्यास्यति ?

लीला—यद्येतत् पितरौ ज्ञास्यतस्तर्हि तव यत्नस्य महान् विघातो भविष्यति ।

सत्य—अतः सुगुप्तमेव सर्वं साधयिष्यामि । यावत् तस्यैवान्तिकं गच्छामि।

(इति प्रस्थाय गच्छति)

लीला—अहो ! मातापितृस्नेहादपि बलवत्तरः सोदरस्नेहः । यतो हि मम भ्राता पठनप्रसक्तोऽपि मय्यनुकम्पया सद्य एव प्रस्थाय गतः । न जाने तस्य सखा किं वक्ष्यतीति । यद्येव स भ्रातुः प्रार्थनामङ्गीकुर्यात् तथापि कथं विवाहो निरन्तरायं निर्वर्तिष्यते ? न खलु पित्रोः सङ्कल्पं निरोद्धुं भ्रातापि क्षमः । यत्सत्यं व्याकुलीभूता मे

मतिः। (विचिन्त्य) अथ वा मे पितामही अत्यन्तमनुरक्ता मयि। तस्यै सर्वं निवेदयिष्यामि। सा मे पित्रोः दुर्व्याधेः चिकित्सां कुर्यादपि। यावत् तस्या एव सकाशं गच्छामि। (परिक्रम्य अवलोक्य च) अहो! पिता मे किञ्चित् भाण्डं वहन्नित एवा-गच्छति। नाहं तस्य सम्मुखे पतितुमिच्छामि। तस्मा-दनेन द्वारेण निर्गच्छामि (इति द्वारान्तरेण निष्क्रान्ता)

(ततः प्रविशति शिरोनिहितभाण्डो गौतमः)

गौ—(भाण्डं भूमौ निधाय) हा उ। पुत्रीणां विवाहो नाम अस्माकं भाण्डोद्वाहः। अभिज्ञैः कथ्यमानाः संसारक्लेशाः पुत्रीणां विवाहकाले प्रत्यक्षमेवानुभूयन्ते। मम तु द्विगुणः क्लेशः। यतो हि मया कृतं सर्वमपि कर्म मम गृहस्वामिनी सावज्ञं धिक्करोति। अत्र तावन्मया महार्घाण्यंशुकान्यानीतानि। पश्यामि तावदेतैरपि वा सा प्रसन्ना भविष्यतीति (इति भाण्ड-मुद्धृत्य वहति)

चन्द्रिका—(प्रविश्य) कः कोऽत्र भोः?
(ब्राह्मणो भयं नाटयति। तस्य शिरसि स्थितं मृद्भाण्डं वस्त्रभाण्डेन सहाधः पतति। मृद्भाण्डं भिद्यते)

चन्द्रिका—अहो! त्वम्। भाण्डहारी कश्चित् चोर इति मया तर्कितम्। किमिदं भाण्डे?

गौ—इमान्यंशुकानि महार्घाणि। (इत्युक्त्वा भाण्डं श्लथयति) पश्य।

चन्द्रिका—(सावज्ञं विस्फारिताभ्यां लोचनाभ्यां वस्त्रभाण्डं पश्यन्ती सहासं एकैकं वस्त्रमादाय दर्शयन्ती) इमानि किल महार्घाण्यंशुकानि।

गौ—प्रिये! एतदपेक्षया रम्यतराण्यंशुकानि न सन्ति विपण्याम्।

चन्द्रिका—कथं वा स्युः ? कुत्र वा स्युः ? इमानि खलु भागवततुल्यानि महापुराणानि । अस्तु । कस्यै इमान्यंशुकानि ?

गौ—लीलायै ।

चन्द्रिका—दरिद्रस्य वेदान्तभट्टस्य भार्या किमर्हत्येतादृशानि महार्घाणि अंशुकानि ?

गौ—(सकोपम्) लीला न वेदान्तभट्टस्य भार्या किन्तु मद्यपस्य हृद्यवालकस्य ।

(नेपथ्ये लगुडशब्दः)

गौ—(कर्णं दत्त्वा) किं तत् ?

चन्द्रिका—(विलोक्य) एषा धर्मदेवता दर्शनं ददाति ।

(ततः प्रविशति जपमालाहस्ता वृद्धा)

गौ—अम्ब ! किमर्थमागतासि ?

वृद्धा—त्वां द्रष्टुकामा । अस्ति मे वक्तव्यं किञ्चित् ।

गौ—अहं वैवाहिके कर्मणि व्यग्रोऽस्मि । सङ्ग्रहेण कथय यद्वक्तव्यम् ।

वृद्धा—कस्या विवाहः ?

चन्द्रिका—तवैव ।

गौ—तवैव लीलायाः ।

वृद्धा—एवं तर्हि प्रथमं मम अन्त्यकृत्यं कृत्वा पश्चात् तस्या विवाहं करिष्यसि ।

गौ—अम्ब ! किमेवमधर्मं मन्त्रयसे ?

चन्द्रिका—मातुः अन्त्यकृत्यानुष्ठानं किम् अधर्मः ?

गौ—अम्ब ! किमेवं भाषसे ?

वृद्धा—नाहं लीलायाः पर्यश्रुलोचनं मुखं द्रष्टुं पारयामि ।

गौ—अम्ब ! इयं खलु विदुषी लीलां कस्मैचित् मत्तबालकाय दित्सति । कथ न रोदिष्यति तपस्विनी लीला ?

वृद्धा—कोऽयं वेदान्तो नाम ?

चन्द्रिका—वेदान्तो नाम त्वादृशीनां वृद्धानां वरणाय योग्यः ।

वृद्धा—(सावज्ञं चन्द्रिकां प्रति) मद्यपो मत्तयोषितां योग्यः, न तु लीलायाः । तस्या उभावपि नानुमतौ ।

गौ—पुनः कोऽभिमतस्तस्याः ?

वृद्धा—अहं तदेव तामपृच्छम् । साब्रवीत्—'धर्मराजो मेऽभितः' इति ।

गौ—त्वया किमुक्तम् ?

वृद्धा—मयोक्तम्—'धर्मराजं वरीतुमहं सन्नद्धास्मि । अतः स ते दुर्लभः'—इति

गौ—ततस्ततः ?

वृद्धा—ततस्तया साश्रुनेत्रयापि हसन्त्या कथितम्—'त्वत्तः पूर्वमेव धर्मराजो मां वरीष्यति'—इति ।

गौ—हन्त ! कोऽयं धर्मराजो नाम ?

वृद्धा—धर्मराजः पितृपतिः शामनो यमराट्—यमः ।

चन्द्रिका—न न । धर्मराजो वेदान्तभट्टः ।

गौ—मद्यपो वा भवतु वेदान्तभट्टो वा, कथञ्चित् वत्सायाः प्राणाः परिरक्षणीयाः । कोऽभ्युपायः ?

वृद्धा—अस्त्यभ्युपायो यदि त्वं तव आग्रहं मुञ्चसि ।

गौ—सत्यं मुच्यते मया ग्रहः ।

वृद्धा—स्नुषे ! त्वमपि मुञ्च ते धनपिशाचिकाम् ।

चन्द्रिका—मयापि मुक्तैव ।

वृद्धा—एवं तर्हि लीलाया विवाहो न वेदान्तभट्टेन नापि मद्यपेन सह भविष्यति। इमां वार्तां लीलायै कथयित्वा तामाश्वासयामि। (इति प्रतिष्ठते)

गौ—अम्ब ! किमिदम् ? मया हि आग्रहो मुक्तः ; न तु वेदान्तभट्टः।

चन्द्रिका—मयापि सोमिलो न मुक्तः।

वृद्धा—एवं तर्हि मम प्राणैस्तस्याः प्राणा रक्ष्यन्ताम्।

गौ—कथम् ?

वृद्धा—यद्यहं म्रिये तर्हि सम्प्रति निश्चित उद्वाहो न प्रचलिष्यति।

चन्द्रिका—रे ! यदि त्वं म्रियमाणा सुताया विवाहस्य विघ्नं करिष्यसि तर्हि तव शिरः शतधा भङ्क्ष्यामि।

वृद्धा—मृतां मां किं वा कुरुष्व। जीवन्तीं मां स्प्रष्टुमपि न शक्नोषि।

चन्द्रिका—रे ! किं भणसि ? (इति तां हस्तेन गृह्णाति)

गौ—चण्डि ! मां ताडय। उज्झ मे मातरम्। (इति ताम् आकर्षति। सा तमधः पातयति। वृद्धा क्रोशति)

(निष्क्रान्ताः सर्वे)

---

## ॥ चतुर्थोऽङ्कः ॥

(ततः प्रविशति लगुडावलम्बी विवाहगृहं गच्छन् वृद्धः)

वृद्धः—(अध्वखेदमभिनयन्) अतीव श्रान्तोऽस्मि । न जाने गौतमस्य गृहं कियद्दूरे वर्तत इति । अत्र शीतलच्छायायां किञ्चित् विश्रमिष्ये । (उपविश्य) हा !

(द्वौ कुमारौ प्रविशतः)

प्रथमः—(वृद्धमवलोक्य) इहैको जरठस्तरुमूले ।

द्वितीयः—तिष्ठतु । सम्प्रति अस्तोन्मुखो भास्करः । गच्छावस्तावत् ।

प्र—तन्न युक्तम् । एनं कुशलं पृष्ट्वा गमिष्यावः ।

द्वि—एवं क्रियताम् ।

(उपसर्पतः)

प्र—आर्य ! त्वं कुत्र प्रस्थितः ?

वृद्धः—युवां कुत्र गच्छथः ?

प्र—आवां गौतमस्य गृहं गच्छावः ।

वृद्धः—अहमपि तत्रैव गच्छामि ।

द्वि—किं तर्ह्यत्र स्थीयते ?

वृद्धः—युवां प्रतिपाल्यैव ।

द्वि—किम् ? आवां ते परिचितौ ?

वृद्धः—अद्य परिचितौ । अहं पन्थानं न जानामि । अतो मामपि तत्र नयतम् ।

द्वि—किमर्थं वृद्धस्त्वं तत्र गच्छसि ?

वृद्धः—किं युवानौ युवां गौतमस्य सुतां परिणेतुं यच्छथः ?
द्वि—आवां दक्षिणार्थं गच्छावः ।
वृद्धः—अहमपि तदर्थमेव ।
द्वि—तर्हि सर्वे गच्छामः ।
वृद्धः—आयुष्मन् ! अहम् अतीव पिपासितः । अपि कुतश्चित् जलम् आनेष्यसि ?
प्र—आर्य ! तथा (इति जलाय गच्छति)
द्वि—आर्य ! भगवतः सूर्यस्य दन्ताः पूर्वं दक्षयागे दक्षानुयायिभिः भग्नाः श्रूयन्ते । तव दन्ताः केन भग्नाः ?
वृद्धः—भद्रमुख ! महत्येषा कथा । मम भार्यया भग्ना मे दन्ताः । तत्सर्वं परिपीतजलो गच्छन् अध्वश्रमविनोदाय विस्तरेण कथयिष्यामि ।
द्वि—तर्हि उत्तिष्ठ । यत्र मे सहचरो गतः तत्रैव गत्वा जलं पीत्वा गमिष्यामः ।
वृद्धः—( श्रमं नाटयन् ) नाहं पदमपि चलितुं शक्नोमि ।
द्वि—यदि चलितुमशक्तस्तर्हि किमिति त्वम् आत्मानमायासयसि ? एवं तावत् कुरुष्व ।
वृद्धः—किम् ? कथय ।
द्वि—(वृद्धस्य हस्तात् लगुडं गृहीत्वा) इमं लगुडं मम हस्ते देहि । अहम् इमं प्रदर्श्य तव नाम चाख्याय दक्षिणामानेष्यामि, तुभ्यं च दास्यामि ।
वृद्धः—यदि न दास्यन्ति ?
द्वि—तदा लगुडमिमम् उद्धृत्य दर्शयामि । तदावश्यमेव दास्यन्ति (इति वृद्धस्याग्रे दण्डमुद्धृत्य दर्शयति । वृद्धः क्रोशति)

प्र—(जलपात्रहस्तः प्रविश्य) रे ! किं किम् ?

(ततः पुरञ्जनो नाम ब्राह्मणः सकपोलताडं ससम्भ्रमं च प्रविशति)

पुरञ्जनः—रे ! मा ताडय वृद्धम् । महत् पापं ते भविष्यति । कुम्भीपाके पतिष्यसि ।

द्वि—(पुरञ्जनमवलोक्य) रे ! जाल्म ! न वृद्धस्ताड्यते मया ।
(इति पुरञ्जनमुपसर्पति)

पुर—( सशङ्कम् ) रे ! स्नानशुद्धोऽस्मि । मा स्पृश । अपसर ।

द्वि—किं किम् ? अशुद्धोऽसि ? एवं तर्हि शुद्धो भव ।

(इति प्रथमस्य हस्तात् जलपात्रमादाय पुरञ्जनस्य शिरसि जलं पातयति)

पुर—( विक्रोशन् ) पापिन् ! कपे ! किमिदं त्वया कृतम् ?

वृद्धः—भद्रमुख ! देहि मे जलम् । पिबामि तावत् ।

प्र—(जलपात्रमादाय) आनीतं जलमनेन प्रक्षिप्तम् । पुनरानयामि
(इति प्रतिष्ठते)

पुर—( स्वशिर उत्तरीयेण मार्जन् ) भद्र ! नमस्ते । अहं तावत् गमिष्यामि । ततो जलमानेष्यसि । अन्यथा अयं चपलो बटुः मां भूयः स्नपयिष्यति ।

प्र—सखे ! त्वयास्य ब्राह्मणस्य कृतोऽपराधः । एनमनुनय । (इति जलाय गच्छति)

द्वि—(प्राञ्जलिः) आर्य ! मा स्म कुप्यः । आगम्यताम् । उपविश्यताम् । वयमपि ब्राह्मणा एव (इति तं कूर्चेनाकृष्य उपवेशयति)

वृद्धः—भद्रमुख ! किमित्येवं वेदज्ञमवमन्यसे ?

द्वि—किमेषा अवमानना ? किं न श्रुतं युष्माभिः यत् पुरा दक्षयज्ञे भगवान् महर्षिर्भृगुः कूर्चे गृहीत्वा यज्ञशालातो वहिष्कृतः । (इति भूयस्तस्य कूर्चे ग्रहीतुं यतते, स वारयति)

वृद्धः—सत्यम् । मयापि तच्छ्रुतम् ।

द्वि—अपि त्वं गौतमस्य गृहमागच्छसि ?

पुर—आगच्छामि । परं तत्र दम्पत्योः कलहेन सर्वोऽप्यारम्भः समुच्छिन्न इति श्रुतं मया ।

द्वि—किं किम् ? विस्तरेण कथय ।

पुर—तत्र हि कन्यायाः पित्रा एको वरो निश्चितः । स किल कन्याया मात्रे न रोचते । तेन तया अन्य एव कश्चिन्निश्चितः । सोऽपि किल कन्याया भ्रात्रे न रोचते । सोऽपि तृतीयं कञ्चन निश्चितवान् इति श्रूयते किंवदन्ती ।

द्वि—अपि सा कन्यका त्रीनपि प्रत्याख्याय चतुर्थं कञ्चन वरीष्यति ?

पुर—चतुर्थं पञ्चमं वा न जाने । वर्तते तत्र महान् व्यामोहः ।

वृद्धः—किं तत्रेत्युच्यते ? अद्यत्वे हि सर्वत्र विजृम्भते विवाहविषयकः कोलाहलः ।

पुर—सम्प्रति हि धर्म एव सर्वो मुण्डितशिराः परिव्रजति । कालस्य कुटिला गतिः ।

प्र—(सजलः प्रविश्य) आर्य ! पीयतां जलम् (इति वृद्धायार्पयति । वृद्धः सशब्दं जलं पिबति । पुरञ्जनो द्वितीयस्य मुखमवलोक्य भयं नाटयति)

द्वि—(पुरञ्जनमवलोक्य) अपि त्वं जलं पातुमिच्छसि ?

पुर—महाभाग ! नमस्ते ।

वृद्धः—(जलपानजातहिक्कः शनैः लगुडमवलम्ब्योत्तिष्ठन्) गच्छामः सर्वे ।

(निष्क्रान्ताः सर्वे)

## ॥ पञ्चमोऽङ्कः ॥

**चन्द्रिका**—हन्त ! लोके प्रायेण स्त्रियः पुरुषान् विजित्य स्ववशे स्थापयन्ति । मम तु नास्त्येतादृशं भागधेयम् । यतो हि मम भर्ता मया बहुधा शासितोऽपि न मे वचनं गृह्णाति । सामादीनां मध्ये दण्डः परं न मया प्रयुक्तः । अथवा मत्तमहिषस्य तस्य दण्डेनापि किं भवेत् ?

(प्रविश्य)

**गौ**—रे ! काकि ! भेकि ! किमारटसि ?

**च**—रे ! धर्मकाक ! जानीहि, अहमपि ते पादादारभ्य केशपर्यन्तं नाम्नां सहस्रेण स्तोतुं शक्नोमि ।

**गौ**—रे ! एवं मर्यादामतिक्रान्ता त्वं बन्धनमर्हसि ।

(इति तां पाशेन बध्नाति । सा क्रोशति)

(लीला प्रविशति)

**लीला**—तात ! किमेतत् ?

**गौ**—इदमेव द्वन्द्वयुद्धं नाम । त्वमपेहि ।

**च**—वत्से ! इदमेव स्त्रीहत्या नाम । त्वमपसर ।

**लीला**—तात ! त्वामनुनये ; मुञ्च मातरम् ।

(गौतमो मुञ्चति)

**गौ**—रे ! किं वृथा जल्पसि ? यद्यहं पुरुषः, यदीमानि मे श्मश्रूणि तर्हि साधयिष्याम्येव मे मनोरथम् ।

चन्द्रिका—नाहं वृथा जल्पामि। किन्तु जानीहि, यद्यहं चन्द्रिका यदि चाहं मे पितुः सुता तर्ह्यहमपि मम मनोरथं साधयिष्यामि। (लीलामवलोक्य) वत्से! एहि गच्छावस्ते मातुलगृहम् (इति तां हस्तेनाकर्षति, सा स्वस्थानान्न चलति) पश्य त्वामहं नेष्यामि (इति तर्जयन्ती निर्गता)

गौ—(सोच्छ्वासम्) लब्ध इदानीमाश्वासः। महामारी दैवयोगात् स्वयमेव अपगता। इदानीं मे मनोरथो निरन्तरायं सेत्स्यति। (लीलामवलोक्य) वत्से! अस्ति किञ्चित् कर्तव्यशेषम्। तत् कृत्वाहमुषस्यागमिष्यामि (इत्युक्त्वा निर्गतः)

लीला—हन्त! परिपक्वमिदानीं मे पुराकृतं कर्म? यत्—मम पितरौ कोपस्य परां कोटिमधिरूढौ। भ्राता तु तस्य सख्युः सकाशं गतः किंवृत्त इति न ज्ञायते। मन्ये तस्य प्रयत्नो न सफलोऽभूत्। अन्यथा कथमियता कालेन न प्रत्यागच्छति। श्वः प्रभाते विवाहस्य मुहूर्तः। न जाने किं मया मन्द-भागिन्या कर्तव्यम्। यद्यहम् अद्य अर्धरात्रे गृहादेकाकिनी निर्गच्छामि तर्हि लोको मामन्यथा शङ्केत। अतो मे मरणमेव शरणं निश्चितम्। अथ तु अन्त्यक्षणं यावत् भ्रातरं प्रतीक्ष्य प्रभाते शुभे मुहूर्ते यत् कर्तव्यं तत् करिष्यामि। दिष्ट्या अस्माकं गृहे स्थितः कूपोऽतीव अगाधो वर्तते। तस्मिन् पतित्वा व्यापादयिष्याम्यात्मानम्। अथेदानीं शोकसन्तप्तमात्मानं शय्यायां पतिता विनोदयामि। अन्तः पितामही शेते। यावत् तस्याः समीपं गच्छामि।

(ततः प्रविशति निद्रिता वृद्धा)

लीला—एषा गाढं निद्रिता दृश्यते। नाहमेतां प्रबोधयामि। (इति

दीपमल्पभासं कृत्वा) हा ! भगवन् ! धर्मराज ! दयालो ! दीनबन्धो ! अपि मां नेष्यसि दीर्घनिद्राम् । अपि प्रेषयिष्यसि तव भटान् (इति प्राञ्जलिः शय्यायां शयाना निद्रां गता)

(ततः प्रविशति चोरः)

**चोरः**—(परितो विलोकयन्)

इदं शूलमयं कुन्तः खड्गोऽयं रक्तपिच्छिलः ।
एते मम त्रयो देवा एते मे जीवनप्रदाः ॥
शूलेन नेत्रे कृन्तामि कुन्तेनास्यं विदारये ।
खड्गेन कुण्ठये कण्ठं तेन तुष्यति भैरवः ॥

अरे ! सन्धिभेदक ! एह्यरे ।

(नेपथ्ये)

(अयमागच्छामि)

**द्वितीयः**—रे ! भदन्त ! अयमस्मि । ब्रूहि कस्य नयनमुत्पाटनीयम् ? कस्यास्यं वालुकया पूरणीयम् ? कस्य हस्तपादं पाशेन बन्धनीयम् ? कस्य गृहे सन्धिच्छेदः कार्यः ?

**प्रथमः**—रे ! किं विस्मृतं त्वया ? अद्य गौतमस्य गृहे प्रवेष्टव्यमावाभ्याम् ।

**द्वि**—आ ! एवं किल तत् ! मया विस्मृतमुन्मत्तेनेव । कुत्र गौतमस्य गृहम् ?

**प्र**—इदमेव तस्य गृहं भवितुमर्हति । पश्य ! गोपुरद्वारं वैवाहिकैः तोरणैरलङ्कृतम् । प्रविशामस्तावत् (उपसृत्य) अये ! इयं सा कन्या ! इमामादाय गच्छावः ।

**वृद्धा**—(शयनादुत्थाय तौ दृष्ट्वा) हा ! (इत्याक्रोशन्ती मूर्च्छति । लीला ससाध्वसमुत्थाय निश्चलनयना वेपमानाङ्गी तिष्ठति) ।

प्र—रे ! बाले ! किं भीतासि ?

लीला—कौ युवाम् ?

प्र—(गम्भीरस्वरेण) आवां त्वां हर्तुमागतौ । अनेन कृष्णवस्त्रेण आच्छादितशरीरा प्रतिष्ठस्व (इति कृष्णवस्त्रं भूमौ निदधाति)

लीला—इह सन्ति द्रविणानि । तानि नयतम् । मदीयानि भूषणान्यपि सर्वाणि दास्यामि । तान्यपि नयतम् । उज्झतं माम् ।

प्र—अये ! अवां स्वाम्यादेशकारिणौ । न द्रविणैः नापि भूषणैः नौ प्रयोजनम् । त्वमेव नेतव्या ।

लीला—(अपवार्य) नूनमेतौ न चोरौ । मन्ये मय्यनुकम्पया धर्मराजेन प्रेषिताविमौ भटौ । अथ व्यक्तं ज्ञास्यामि । (प्रकाशम्) अहम् अपररात्रे युवामनुगन्तुं न शक्नोमि भयेन ।

प्र—भीतामभीतां वा न मुञ्चावः ।

लीला—एवं तर्हि मां हत्वा नयतम् ।

प्र—मातुरग्रे हनिष्यसे । नात्र ।

लीला—किं मम मातुरग्रे ? ततोऽहं भीतास्मि ।

प्र—अस्माकं जगन्मातुः भैरव्या अग्रे ।

लीला—(अपवार्य) असंशयं यमभटाविमौ । शुभोऽयं मुहूर्तो मे मङ्गलप्रस्थानस्य ।

प्र—रे ! किं चिन्तयसि ?

लीला—न किञ्चित् । आपृच्छे मे वृद्धां पितामहीम् ।

प्र—तामचिरेण त्वं द्रक्ष्यसि ।

लीला—सत्यम्, मद्वियोगेन खिन्ना सा न चिरं जीविष्यति । (प्रकाशम्) एषा युवामनुसरामि (साश्रुनेत्रा प्राञ्जलिः) हा ! कुलदेवताः ! हा वृद्धे ! हा अम्ब ! हा तात ! हा

प्रेमनिधे भ्रातः ! एषा गच्छामि मन्दभागिनी । अयं मे युष्माकम् अन्तिमः प्रणामः (इति कृष्णवस्त्रावगुण्ठितशरीरा रुदती प्रस्थिता) ।

प्र—अम्ब ! मा रोदीः । शुभास्ते लोका भविष्यन्ति । अग्रतो भव । (सर्वे परिक्रामन्ति)

(ततः प्रविशति पुण्डरीकः)

पुण्डरीकः—(चोरौ विलोक्य) हा ! हा ! (इति क्रोशन् परिधावति)

द्वि—रे ! कुत्र पलायसे ? (इति तं तस्यैवोत्तरीयेण बध्नाति) रे ! कस्त्वम् ? कुत्र च गच्छस्यर्धरात्रे ?

पुण्ड—अहम्—(इत्यर्धोक्ते भयं नाटयति)

प्र—सत्यं ब्रूहि । अन्यथा ते जिह्वां कृन्तामि (इति खड्गं दर्शयति)

पुण्ड—अहं मम भगिन्या वचनेन गौतमस्य नाम ब्राह्मणस्य गृहं गच्छामि ।

प्र—का ते भगिनी ? किन्निमित्तं च गच्छसि ?

पुण्ड—गौतमस्य जाया मम भगिनी । तत्सुताया अस्मद्गृहे गूढविवाहो निश्चितः । तस्याः सुतां अस्मद्गृहं नेतुं तत्र गच्छामि ।

प्र—रे ! न त्वया गाढान्धकारे एकाकिना गन्तव्यम् । आगच्छ । प्रभाते तत्र गमिष्यसि ।

(पुण्डरीको विषण्णः प्रतिष्ठते)

(निष्क्रान्ताः सर्वे)

---

## ॥ षष्ठोऽङ्कः ॥

(ततः प्रविशति गौतमः)

गौतमः—हन्त ! विवाहस्य मुहूर्तः प्रत्यासन्नः । सत्यव्रतोऽपि न वर्तते गृहे । मन्ये स बन्धूनामामन्त्रणाय मया प्रेषितश्चिरयति । अद्यत्वे बालकानां स्वभाव एव अन्यादृशः यत्किञ्चिदुक्तास्ते, यत्किञ्चित् कुर्वन्ति । (परिक्रम्यावलोक्य च) हन्त ! एते समागताः सम्बन्धिनः (इति ससम्भ्रमं कम्बलमास्तृणोति)

(पुरोहितादयः सम्बन्धिनः साशङ्कं प्रविशन्ति)

गौ—उपविशन्तु सर्वे ।

पुरो—कुत्र ते कुटुम्बिनी ? (इति हस्तसंज्ञया भूयः पृच्छति)

गौ—सा गर्दभी मत्तो भीता पलायिता ।

वेदान्त—गर्दभी गर्दभाद्भीता स्वयमेव पलायिता ।

पुरो—( सहर्षम् ) इदानीं नो निर्विघ्ना भविष्यति वैवाहिकी क्रिया ।

(ततः प्रविशति क्रोधाकुला चन्द्रिका)

वेदान्त—सेयं शूर्पणखा नाम राक्षसी पुनरागता ।

चन्द्रिका—दुहितुः आनयनार्थं मया प्रेषितः पुण्डरीको न प्रत्यागतः । मन्ये सोऽत्रैव निरुद्धस्तिष्ठति । (परिक्रम्यावलोक्य च) अहो ! अत्र मे भर्तुः सम्बन्धिनः । मम सम्बन्धिनः कस्माच्चिरयन्ति । मया सहैव प्रस्थितं तैः । (अवलोक्य) दिष्ट्या ! आगता एव । (इति सा कम्बलमन्विष्यति ।

वेदभट्टादयः सभयं स्वाधिष्ठितं कम्बलं यच्छन्ति । सा तम् आदायान्यत्र विस्तृणाति । वेदभट्टादयः करवस्त्रेण रजांसि सम्मार्ज्य भूमावुपविशन्ति)

(ततः प्रविशन्ति कुशिको रामिलः सोमिलश्च)

चन्द्रिका—इह उपविशन्तु सम्बन्धिनः (इति तानितरसम्बन्धिनामभिमुखे कम्बले सन्निवेशयति)

(गौतमो दीपादिकमेकैकशः अभ्यन्तरादानीय स्वसम्बन्धिनामग्रे निदधाति । चन्द्रिका च तान्येकैकशः स्वसम्बन्धिनां समीपे स्थापयति)

(प्रथमतः सा दीपं नयति)

वेदान्त—दीपो गतः ।

(ततः सा जलं नयति)

वेदान्त—जलं यातम् ।

(ततः सा शनैः गन्धद्रव्यं नयति)

वेदान्त—गन्धद्रव्यं शनैर्गतम् ।

(ततः सा ताम्बूलकरङ्कं नयति)

वेदान्त—ताम्बूलस्य च लोपोऽभूत्

(भयं नाटयन्)

दीपो गतो जलं यातं गन्धद्रव्यं शनैर्गतम् ।
ताम्बूलस्य च लोपोऽभूत् किमस्मानपि नेष्यति ॥

पुरो—अस्माकं वरस्य शनिपीडा परिहारार्थं तत्सर्वं दानत्वेन मन्यामहे ।

(गौतमो निलीय स्थितः)

कुशिकः—भवति ! गृहस्वामिनमाह्वय ।

चन्द्रिका—किमर्थम् ? अहमेवास्मि ।

कु—स किञ्चित् प्रष्टव्यः ।

च—तर्हि भवन्त एवाह्वयन्तु ।

कु—भो ! गृहस्वामिन् !

गौ—सैव गृहस्वामिनी ; नाहम् । अहं तु गौतमः ।

कु—भो ! इतस्तावदागम्यताम् ।

गौ—(उपसृत्य) किन्निमित्तम् ?

कु—सम्बन्धिभ्यो दातव्यानि न सर्वाणि वस्तून्यानीतानि ।

गौ—किं मद्यभाण्डम् आनेतव्यम् ? उत क्षुरभाण्डम् ? उताहो धूमवर्तिकाकरण्डम् ? (इति मद्यगन्धं नाटयति)

कु—भवति ! किमेतत् ?

च—एतत् एवमेव । अहं तावदानयामि (इति सा अभ्यन्तरात् अंशुकादीन्यानीय स्वसम्बन्धिनां समीपे स्थापयति)

वेदान्त—आचार्य ! इमान्यपि वस्तूनि दानत्वेन मन्यामहे । को दोषः !

वेद—(सविषादं गौतममवलोक्य) आर्य ! किमिदम् ?

कु—सर्वाणि वस्तूनि तेभ्यो दीयन्तां तया । अहं युष्मभ्यं कन्यां दास्यामि ।

(गौतमः सहर्षं शिरश्चलयति)

वेदान्त—(सोमिलमवलोक्य) तावप्यर्धं ममाप्यर्धं मौनमाचर पण्डित ।

च—आरभ्यताम् । मुहूर्तसमयोऽत्येति ।

कु—इदमारभ्यते । वधूरानीयताम् ।

च—तथा (अभ्यन्तरं गत्वा प्रतिनिवृत्य) गृहाभ्यन्तरे न दृश्यते वधूः ! नूनमनेन निगूहिता भवितुमर्हति ।

वेदान्त—(सभयम्) न मया निगूहिता, न मया ।

च—(गौतममुपसृत्य) ब्रूहि कुत्र निगूहिता वत्सा ?

गौ—न मया निगूहिता । त्वयैव नीता स्यात् ।

वृद्धा—(रुदती) वत्सा चोराभ्याम् अपहृता ।

गौ—अम्ब ! किं वदसि ?

वृद्धा—अतीतायां रात्रौ द्वौ चोरौ गृहं प्रविष्टौ । अहं प्रबुद्धापि वत्सां लीलां वेपमानसर्वावयवां वीक्ष्य प्रतीकारस्य कर्तुमशक्यतया गतप्रज्ञा भूमौ न्यपतम् । ततो यावत् प्रत्यागतप्रज्ञा पश्यामि तावत् लीला नासीत् । असंशयं सा चोराभ्यामपहृता (इति भूमौ निपत्य रोदिति)

च—हा ! कुत्र मे वत्सा नयनानन्दजननी ?

(सर्वे हाहाकारं नाटयन्ति)

सत्य—(प्रविश्य) अम्ब ! तात ! दिष्ट्या वर्धामहे !

वृद्धा—किं किं जीवति वत्सा ?

सत्य—जीवत्यागच्छति च ।

वेदान्त—हन्त ! मम जीवितमेतदायाति ।

वृद्धा—केन रक्षिता मे वत्सा ?

सत्य—मम सहाध्यायिना विलासकुमारेणेति पुण्डरीकमुखाच्छ्रुतं मया ।

गौ—जाने, स विलासकुमारः परोपकारशीलः सुगुणः शान्तो विनीतः सत्यवादी च ।

च—किं पुण्डरीकोऽपि चोरैर्गृहीतः ? कियद्दूरे वर्तन्ते ते ?

सत्य—आगता एव ।

(ततः प्रविशति विलासकुमारो वध्वा पुण्डरीकेण च सह)

वृद्धा—(द्रुतमुपेत्य लीलामालिङ्ग्य) वत्से ! यमपुरं गत्वा प्रत्यागतां त्वां पश्यामि (इति वाष्पं विसृजति)

वेदान्त—एहि प्रिये ! एहि । यमपुरं गत्वा मम पुरमागतासि ।

चन्द्रि—पुण्डरीक ! को वृत्तान्तः ?

पुण्ड—लीलाया आनयनाय त्वया विसर्जितोऽहं आगच्छन् पथि चोराभ्यां गृहीतः । तौ पुनः मामिमां च भैरव्या आयतनं नयन्तौ अनेन महासत्त्वेन प्रसह्य अवरुद्धौ केनाप्युपायेन निबद्धौ च ।

वेदा—उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।

चन्द्रि—नूनं महासत्त्व एवायं रमणीयगुणालयः । ततस्ततः ?

पुण्ड—ततो मां लीलां च मोचयित्वा अत्रानीतवान् अयं महाभागः ।

गौ—कुत्र तौ चारौ ?

पुण्ड—तौ राजपुरुषाणां हस्ते समर्पणीयत्वेन निश्चितौ । परं पथि यदृच्छया मिलितस्य सत्यव्रतस्य पादयोः पतितौ तेन मोचितौ च ।

वृद्धा—जाने ! करुणापरवशम् आयुष्मतश्चेतः ।

वेदान्त—(नृत्यन्) अधुना प्रवर्ततां विवाहः ।

पुण्ड—प्रथमं तावदयं महोपकारी सम्भावनया अभ्यर्च्यताम् ।

गौ—अवश्यं प्राणदाता प्रथमं सम्भावनीयः ।

चन्द्रि—अभ्यर्चनीयोऽयं महार्घेण महता रत्नेन ।

सत्य—तात ! किं तत् रत्नं येनायं सम्भावनीयः ?

वृद्धा—अस्माकं वत्सा लीलैव महार्घं रत्नम् । अन्यथा कथमियं चोराभ्यामपहृता भवेत् ।

वेदान्त—जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते ।

पुण्ड—तथ्यमाह भगवती ।

सत्य—तात ! किं चिन्तयसि ?

गौ—किं चिन्तनीयम् ! एतावन्तं कालं तमसावृतं मे नयनम् अग्रतः स्थितमपि सुवर्णनिधिं नाद्राक्षीत् । कः खल्विदानीं लब्धे सुवर्णे दुर्वर्णाय स्पृहयेत् । माता कथं वा मन्यते ?

सत्य—अम्ब ! कथं नु मन्यसे ?

चन्द्रि—मया कथमन्यथा मन्येत ? इयन्तं कालं महामणेः अलाभादेव मे तव पित्रा सह कलहः प्रवृत्तः । उपनते तु महामणौ का नाम मानिनी काचमणिं शिरसा वहति ?

गौ—हन्त ! चोराभ्यामपि महदुपकृतम् । यतो मे गृहिण्या अद्य बुद्धिरुत्पन्ना ।

वृद्धा—वत्स ! नैष केवलं तस्या दोषः । किन्तु त्वमेतावन्तं कालं ग्रहदोषेण व्याकुलीभूतः । अतः सर्वमपि ते प्रतिकूलमासीत् । इदानीं निर्मुक्तग्रहस्य ते सर्वमनुकूलं भविष्यति ।

वेदान्त—सन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।

वेद—आर्य ! भवता हि मह्यं प्रतिज्ञा कृता । किं भज्यते प्रतिज्ञा ?

गौ—आर्य ! न कदापि मया प्रतिज्ञाभङ्गः क्रियते । इतः परं प्रथमत एव जनिष्यमाणां मे पुत्रीं तव सुताय दास्यामि ।

वेदान्त—अहह, एतादृशः सत्यसन्धो न भूतो न भविष्यति ।

वेद—(पुरोहितमवलोक्य) आचार्य ! वयं गच्छामः ।

पुरो—क्षणं तिष्ठ । दक्षिणामादाय गच्छावः ।

रामिलः—(चन्द्रिकामवलोक्य) भवति ! अस्मान् किं ब्रवीषि ?

चन्द्रिका—यदि कार्यान्तरव्याघातो न स्यात् तर्हि भोजनं कृत्वा गन्तव्यम् ।

वेदान्त—भगवानुवाच—रे ! किरीटिन् !

तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ।

सोमिलः—(वेदान्तस्य कण्ठे गृहीत्वा) सखे ! आवां द्वौ समानयोगक्षेमौ स्वः ।

वेदान्त—(सोमिलस्य कण्ठे गृहीत्वा) द्वाविमावम्भसि क्षिप्य गले बध्वा महाशिलाम् ।

(ततः प्रविशन्ति बान्धवाः)

गौ—सर्वे वयमभ्यन्तरमेव गत्वा श्वः शुभे मुहूर्ते विवाहविधिं निर्वर्तयिष्यामः ।

(निष्क्रान्ताः सर्वे)

—:o:—

## ॥ सप्तमोऽङ्कः ॥

(ततः प्रविशन्ति सर्वे)

(वधूवरौ परस्परं कण्ठे मालामर्पयतः)

वृद्धा—वत्से ! त्वया खलु पूर्वेद्युः ममाग्रे कथितम्—'धर्मराजो मेऽभिमतः' इति । किम् अयमेव स धर्मराजः ?

(वधूवरौ सस्मितौ तिष्ठतः)

भद्रे ! अनुरूपेण वरेण सङ्गतासि । त्वमनेन सार्धं चिरं सुखाम्बुराशौ विहर । (वरमवलोक्य) भद्र ! इदमनर्घं रत्नं दैवात् तव हस्तं गतम् ; शिरसा वहस्व । चिरं जीव !

वेदान्त—कन्यारत्नमिदं राजन् युवरत्नेन सङ्गतम् ।

(वधूवरौ नमस्कुरुतः)

सत्य—भगवति ! किमपरं ते प्रियमुपहरामि ।

वृद्धा—किमतः परमपि प्रियमस्ति । तथापीदमस्तु भरतवाक्यम्—

त्यजतु निखिललोकः स्वं ग्रहं राहुकल्पं
कलयतु परतत्त्वं श्रेयसो यन्निदानम् ।
विहरतु च नितान्तं मोदमानः सुखाब्धौ
भवतु भुवनभूत्यै भारती भूतधात्री ॥

(निष्क्रान्ताः सर्वे)



PRINTED AT THE MADRAS LAW JOURNAL PRESS, MYLAPORE, MADRAS.

# Miscellaneous School Books

| | | | |
|---|---|---|---|
| * नीतिशास्त्रम् —A collection of moral and wise sayings from महाभारतम्–मनुस्मृति–भर्तृहरि etc., with Tamil Translation | 0 | 6 | 0 |
| * रामायणसूक्तिसुधाकरम्—A very useful collection of moral and wise quotations from Ramayana and arranged in 4 chapters by a Retired Educational Officcr. | 0 | 10 | 0 |
| अमरकोशः—New edition | 0 | 8 | 0 |
| रघुवंशम् —(मल्लिनाथव्याख्यासहितम्) Complete | 1 | 4 | 0 |
| Do. अरुणगिरिनाथव्याख्या 1-6 Sargas | 2 | 0 | 0 |
| कुमारसंभवम् —(मल्लिनाथव्याख्या) Complete | 1 | 8 | 0 |
| Do. with English Translation | 1 | 8 | 0 |
| नीतिशतकम् —(भर्तृहरि) English Translation. | 0 | 8 | 0 |
| नैषधकाव्यरत्नम् —(मल्लिनाथव्याख्या) and foot-notes. | | | |
| A New edition with introduction 1-6 sargas | 1 | 12 | 0 |
| Do. 7-12 sargas | 1 | 12 | 0 |
| किरातार्जुनीयम् —(व्याख्याद्वयसहितम्) | 0 | 12 | 0 |
| मेघदूतम् —(मल्लिनाथव्याख्या) | 0 | 8 | 0 |
| Do.—(पूर्णसरस्वतीविरचितविद्युल्लता व्याख्या) | 1 | 8 | 0 |
| प्रतापरुद्रीयम् —(रत्नापणव्याख्या) | 2 | 0 | 0 |
| काव्यादर्शम् —(कुसमप्रतिमव्याख्योपेतम्) | 3 | 0 | 0 |

All other Sanskrit Grantha Tamil and Malayalam Books published anywhere in India are always available here at moderate prices.

* These two books are well suited for Moral Instruction.

## ॥ वैदिकसाहित्यचरित्रम् ॥

**A First Book of its kind in Sanskrit Literature.**

By

Professor Vidyasagara P. P. S. Sastri, M. A. (Oxon), M. R. A. S.
And
Pandit K. L. V. Sastri, Mahopadhyaya, etc.

Ordinary Edition 2-4-0] [Library Edition 3-12-0.

**Extract opinions of the above:**

............वैदिकसाहित्यचरितमामूलाग्रमतिदुरूहविषयपूर्णमस्यावश्यकं चेदमाधुनिकानां माणवकानां शिरोमण्यादिपरीक्षामुत्तितीर्षूणां पाश्चात्त्य-सिद्धान्तं खण्डयतां पण्डितानां च ....

महामहोपाध्याय–विद्यानिधि–विरूपाक्षशास्त्री

---

वैदिकसाहित्यचरितम् अक्षरसौष्ठवादिगुणभूयिष्ठम् अतिसरल-वाक्यरचनया रोचमानं प्रमोदयति नश्चेतोवृत्तिम् । अलसानामपि वेदप्रतिपाद्यार्थसङ्ग्राहकतया स्वदिदृक्षामुत्पादयति ।

महामहोपाध्याय–शास्त्ररत्नाकर–यज्ञस्वामिशास्त्री

---

अयं ग्रन्थः अत्यन्तोपकारकः । अत्र विषयाः पुनः संस्कृत-भाषायामेतावत्पर्यन्तं न केनापि संगृहीताः ।

पण्डितराज पुन्नश्शेरि नम्पि नीलकण्ठशर्मा

For catalogues and other enquiries please write to:—

**R. SUBRAHMANYA VADHYAR,**
**BOOK-SELLER & PUBLISHER,**
**KALPATHI—PALGHAT.**

साधुराम

Sadhu Ram

# VIJAYINI.

(ADAPTED FROM SHAKESPEAR)

BY

PARASHURAM L. VAIDYA

*(J. S. Sanskrit Scholar, B. U.,)*



Srirangam:

SRI VANI VILAS PRESS.

1913.

*Price 6 annas.*

॥ श्रीः ॥

# ॥ विजयिनी ॥

## प्रथम आश्वासः ॥



आसीत्पुरा खलु सुरासुराजय्या, विन्ध्यपर्वतस्योत्तरस्यां दिशि प्रसृताभोगा, महीधरसांनिध्येन सुलभारोग्यसम्पत्तिः, स्वाभाविकारोग्यसुभगंकरेण मरुदेशेन दत्तावासा, निदाघेऽप्यनायासलभ्यपर्वतशृङ्गवासा काचिद्धारणावती नाम नगरी। या हि नानादेशोत्पन्नेन वस्तुजातेनानवरतमापूर्यमाणा, तदानयनसमुद्यमबद्धादरान् वणिग्जनान् स्वीययार्थसंपत्त्या सन्तोषयन्ती, परां भूमिं गतेन स्वीयेन रामणीयकेनावर्जितसकलभारतीया, देशान्तरीयैरपि अमरावतीवर्णनमसत्यमिति प्रतिजानानैर्यदि कल्पयितव्या भवेदमरावती नाम काचन नगरी— इयमेव सेति वर्ण्यमाना, अलङ्कृतिर्भारतमध्यस्य, पुरीरत्नमिति जगतः सर्वत्र स्तूयते। या-

मनेकै राजन्यकैरुपभुक्तमुक्ताम्, सदृशपतिलाभेन वारंवारं मुदितमानसाम्, स्वीयस्य सौन्दर्यस्याधिक्यायानवरतं कृतप्रयत्नाम्, प्रतिक्षणं विवृद्धसौभाग्याम् विश्वनिरीक्षणकुतुकिनः पान्थाः सन्ततं निर्निमेषमेवावलोकयन्ति। यया हि अभिलष्यन्त्या रशनासम्पदम्, पवित्रीकर्तुमिच्छन्त्या निखिलानपि पापिनो मा भूत्कदाचिदपि तेषां स्पर्शोऽपीति, विवर्धयन्त्या वृक्षगुल्मादिसंपदम्, पुष्पवतीति काचन स्रोतोवहा अस्खलितेन स्वीयेन प्रवाहेण सकलमपि जनसंदोहं प्रीणयन्ती रशनास्थानमनीयत। यस्यां च भुजसाराक्रान्तभुवनत्रितयावपि आत्मीयानल्पानपि दोषान् जेतुमशक्नुवन्तौ, कलिप्रियौ, कलहे च विनिर्जितापरान्यकलहशौण्डौ द्वावमात्यौ न्यवसताम्; याभ्यां च कलेः परां भूमिं गताभ्यां परस्परं संलापोऽपि न्यषिध्यत। नेदमेव केवलम्, स्फारितेन प्रणयमधुनापि नेत्रेणावलोकनम्, परस्परपरिचारकालापोऽपि निषिद्धोऽभूत्। महाकायौ हि तौ 'कार्तवीर्यमहाविक्रान्तौ' इति नामनी अलमकुरुताम्। मर्यादामतिक्रान्तेन तयोः कलहेन सुन्दरापि सलक्ष्मीकापि आवर्जितसकललोकापि वारणावती विरूपेव निर्धनेव औदासीन्यालिङ्गितेव सर्वदा जनैरवालोकि॥

राजापि पुर्या अस्याः कलहेऽस्मिन्माध्यस्थ्यवृत्तिमवलम्ब्य समये च तान्संबोध्य कलिनिवारणाय कृतप्रयत्नो बभूव । अथापि नैनावमात्यौ स्वभुजगुरुमदौ तमश्रौष्टाम् । अन्ततश्च कलहोऽयमीदृशीं दशामगात्; यदस्यां नगर्यां कार्तवीर्यपक्षपातिनः केचन, महाविक्रान्तपक्षपातिनश्च कतिपये, इति भेदः सर्वतः प्रसृतः । काले काले चोभयपक्षपातिनां जनानां कार्यवशान्मध्येमार्गं मिलितानां भाषणप्रसङ्गोऽपि रुधिरप्रवाहे पर्यणंसीत् । यदि कश्चन सन्धये यतितुमभिलष्यंस्तान् शमयितुं प्रयतते, सर्वोऽप्यस्योद्यमोऽमूभ्यां विफलीक्रियते । अन्ततश्च न कोऽपि कार्येऽस्मिन् बद्धश्रद्धो बभूव ॥

एकदा शारदीयया ज्योत्स्नयायत्तीकृते गगनमण्डले, नलिनीचुम्बनसुखानुभाविकिरणे सम्पूर्णशीतकिरणे, अनागमाद्धेमन्तस्य कुमुदिनीवनसश्रीके उद्यानसरसि, अप्राप्तनिदाघत्वादनष्टहरिततृणासूद्यानभूमिकासु, अतिक्रान्तवर्षासमयत्वाच्छुष्कप्रायासूपवनवेदिकासु, पुष्पसमयप्रथां वसन्तस्य यापयितुमिव कृतप्रयत्नेषु तरुलतासमुदयेषु कृत्रिमवनविहारोत्सुकः सस्त्रीकः कार्तवीर्यपक्षीयो जनः, आमलकीसमीपावासलाभमिषेण स्वामिना सहोद्याने सममिलत् ॥

नेदं विशेषतः कौतुकावहम्, यत्साधारणस्य जनस्य केवलं महिलावर्गदिदृक्षयैव तत्र मेलनं नाम। अथापि न च प्रणयपरवशस्य जनस्य शक्यमिदमवेक्षितुं यत्कार्यमकार्यं वेदमिति न सोऽत्रांशतोऽपि दोषास्पदम्। साधारणकक्षास्थः सर्वोऽपि जनः सामान्यतः, विशेषकक्षास्थितश्च जनो रमणीसमुदाये सचक्षुस्फारं दत्तदृष्टिः सर्वतोऽप्यवालोक्यते। इमामेवाभ्युपगत्य सरणिम्, कार्तवीर्याणां समाजे वयस्यैर्दयितासमूहनिरीक्षणे प्रवर्तितमना रत्नाकरः साकमेकतमेन तेषाम्, अनाहूतोऽपि वेषान्तरं कृत्वोद्यानमगमत्॥

नैव किलेदं कथनीयम्, यन्मनोनुरूपं कार्यं घटयितुमाहितोद्यमोऽपि नरः प्राय उद्देशाननुरूपेण फलेन धात्रा योज्यते। रत्नाकरवयस्यो भट्टराजोऽपि रत्नाकरस्य प्रथमसङ्कल्पितां प्रणयिनीमशोकिनीं तदननुरूपां मन्यमानस्तस्यामनुरक्तं रत्नाकरमानसमधिकरमणीयानां रमणीनां दर्शनेन परावर्तयितुकामो रत्नाकरमुद्यानगमनेनोपच्छन्दयामास। यद्यपि महाविक्रान्तपक्षीयत्वाद्रत्नाकरस्य महदिदं सङ्कटं यदरिसमूहे असहायस्यैकसहायस्य वा गमनम्, अथापि रमणीदर्शनस्पृहाभ्यां रत्नाकरभट्टराजाभ्यां नैवेदमालोचितम्॥

सुधावर्षिभिरमृतांशुमयूखैरखिलोऽपि भूभागो रजतवर्णतां नीतः । सर्वोऽप्याहूतो जनः उद्यानरामणीयकनीरीक्षणे बद्धादरः, कुत्रचन कृत्रिमजलाशयमण्डनानि अभिनवविकसनसश्रीकाणि राजतान्यपि भृङ्गैः सच्चरित्राणीव दुर्जनैः कृष्णवर्णतां प्रापितानि कुमुदानि विलोकयन्नात्मानं विनोदयामास । कुत्रचिच्च कृत्रिमवनभूमयो बालतृणापिधानाः परसीकजेन महावस्त्रेण समानरामणीयका इति विभावयन्, तत्र सौन्दर्यभङ्गभीत्या पदं निधातुमनिच्छन् जनः शुक्लवालुकाप्रक्षेपणमृदुना हिमकरपादोपवर्धितशैत्येनैव पथा मन्दगमनस्पृहामकार्षीत् । एकतश्च कश्चन परिश्रान्तोऽसमर्थश्च गमनसमकालमुद्यानसौन्दर्यनिरीक्षणे, उपवनमध्यस्थापितानां रम्याणां मञ्चानामेकतम आत्मनो देहयष्टिं निक्षिपन् दलदरविन्दमधुपानलोलुपो मिलिन्द इव किमपि मञ्जु गुञ्जन्नास्ते; अन्यतश्चान्दोलनक्रीडासक्तो रमणीजनः विटपविलम्बिनीभिर्वन्यपुष्पालङ्कृताभी रज्जुभिर्निबद्धामान्दोलिकामारूढो मधुरतमेनात्मन आलापेनावर्जितसकललोकस्तिष्ठति ॥

अत्रान्तरे वयस्यानुगतो धृतान्यवेषत्वादज्ञेयरूपो रत्नाकरस्तत्रागमदभूच्च कार्तवीर्यप्रधानपुरुषेण संमानितः । अव-

सिते च कुशलप्रश्नादिके समुदाचारे कार्तवीर्यप्रधानपुरुषो महाबाहुः उपवनशोभानिरीक्षणेन यथेच्छमात्मानं विनोदयतां महाभागाविति तावुभौ व्यजिज्ञपत्। रत्नाकरभट्टराजावपि अधिगतक्रीडनकाविव बालकौ तत्रोद्यान इतस्ततोऽभ्राम्यताम्। भ्रमन्तौ च तौ विविधरमणीक्रीडाकृष्टमानसौ कुत्रचिदान्दोलनाधिरूढस्य कुत्रचन मृदङ्गादिवादित्रसमूहकन्दलितस्य तद्वादनादिनात्मानं रञ्जयतश्च क्वचिदप्सरसामपि नाट्यमङ्गविक्षेपादिकं चोपशिक्षयतः स्त्रीजनस्य दर्शनेनात्मानं धन्यम्मन्यौ भ्रेमतुः॥

अत्रान्तरे विविधसुन्दरीरत्नावलीमध्यरत्नायमानम्, स्वसौन्दर्यगर्वखर्वीकृतामराङ्गनम्, वदनविधुतुच्छीकृतशारदीयसुधांशुबिम्बम्, एकत्रैव त्रिभुवनसौन्दर्यदिदृक्षुणा विधिनाखिलेन धीकौशलेन विनिर्मितमिति जनैः सम्भाव्यमानम्, दुरधिगम्यं जनैः, दुष्प्राप्यं वसुधातले, प्रत्यादेशो भुवनरामणीयकस्य, विजयिनीनामधेयं किमपि प्रमदारत्नं दयिताजननिरीक्षणावधूतचेतसो रत्नाकरस्य दृष्टिविषयतामगमत्॥

रमणीवदनविधुकरस्नातश्च स तत्क्षण एव किमिदमपरं सुधांशुबिम्बं वसुधासञ्चारनिबद्धकौतुकं पृथिव्यामपि सौन्द-

